दोषः, चक्षुष्मता ह्यन्धो नीयते नान्धान्तरेण, तथेहापि द्वावपि (१)प्रवर्त्यांविति कः कं प्रवर्त-येदित्यर्थः। अपि च नैयायिकानामीश्वरस्य निर्दोषत्वं स्वसमयविरुद्धमित्याह—"अपि चे"ति। (२)अस्माकं तु नायं समय इति भावः। ननु कारुण्यादपि प्रवर्तमानो जनो दृश्यते न च कारुण्यं दोष इत्यत आह-"स्वार्थप्रयुक्त एव चे"ति। कारुण्ये हि सत्य-स्य दुःखं भवति तेन तत्प्रहाणाय प्रवर्तत इति कारुणिका अपि स्वार्थप्रयुक्ता एव प्रवर्तन्त इति। ननु स्वार्थप्रयुक्त एव प्रवर्ततामेवमपि को दोष इत्यत आह "स्वार्थवत्त्वादीश्व-रस्ये"ति। अर्थित्वादित्यर्थः। पुरुषस्य चौदासीन्याभ्युपगमान्न वास्तवी प्रवृत्तिरिति ॥३७॥

अपरमपि दृष्टानुसारेण दूषणमाह—

## संबन्धानुपपत्तेश्च ॥ ३८ ॥

दृष्टो हि सावयवानामसर्वगतानां च संयोगः। अप्राप्तिपूर्विका हि प्राप्तिः संयोगो, न सर्व-गतानां संभवत्यप्राप्तेरभावान्निरवयवत्वाच्च। अव्याप्यवृत्तिता हि संयोगस्य स्वभावो, न च निरवयवेष्वव्याप्यवृत्तिता संयोगस्य सम्भवतीत्युक्तम्। तस्मादव्याप्यवृत्तितायाः संयोगस्य व्यापिकाया निवृत्तेस्तद्व्याप्यस्य संयोगस्य विनिवृत्तिरिति भावः। नापि समवायलक्षणः स ह्ययुतसिद्धानामाधाराधेयभूतानामिह प्रत्ययहेतुः संबन्ध इत्यभ्युपेयते, न च प्रधानपुरुषेश्वराणां मिथोऽस्त्याधाराधेयभाव इत्यर्थः। नापि योग्यतालक्षणः कार्यगम्यसम्बन्ध इत्याह "नान्य-त्र" इति। नहि प्रधानस्य महदहंकारादिकारणत्वमद्यापि सिद्धमिति शङ्कते—"ब्रह्मवा-दिन" इति। निराकरोति। "न" कुतस्तस्य मतेऽनिर्वचनीयतादात्म्यलक्षणसंबन्धोप-पत्तेः। "अपिचे"ति। आगमो हि प्रवृत्तिं प्रति न दृष्टान्तमपेक्षत इत्यदृष्टपूर्वे तद्विरुद्धे च प्रवर्तितुं समर्थः, अनुमानं तु दृष्टानुसारि नैवंविधे प्रवर्तितुमर्हतीति शङ्कते-(३) "पर-स्यापी"ति। परिहरति-"न"ति। (४) अस्माकं त्वीश्वरागमयोरनादित्वादीश्वरयोनि-त्वेऽप्यागमस्य न विरोध इति भावः ॥ ३८ ॥

## अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

(५)यथादर्शनमनुमानं प्रवर्तते नालौकिकार्थविषयमितीहापि न प्रस्मर्तव्यम्। सुगम-मन्यत ॥ ३९ ॥

---

वर्तितं कथमीश्वरप्रवर्तनलक्षणकार्यं करोति? एवं सति प्रवर्तकत्वोपपात्तमनुक्त्व, केवलं ततः पूर्वकर्मैवालम्ब्यते तत्राह तत्रापीति। तत्रापीश्वरप्रवर्तने स्वकार्ये पूर्वं कर्म ततः पूर्वभाविकर्मप्रवर्तितेनेश्वरेण प्रवर्तितमिति वक्त-व्यं तथा च सर्वत्रानुपपत्तिसाम्यादन्धपरम्परेत्यर्थः।

(१) कर्मेश्वरौ।

(२) अस्माकान्त्विति। मायामय्यां प्रवृत्तौ सर्वसम्भवान्नाक्षेप उचित इति भावः।

(३) एवं श्रुतेरनुमानाच्चेश्वरासिद्धिं निरस्य पौरुषेयागमात्तत्सिद्धिर्निरस्यत इत्याह परस्यापीति।

(४) अस्माकान्त्विति। शास्त्रयोनित्वेपीश्वरस्यानादिसिद्धनियतक्रमापेक्षणान्नेश्वराधीनं वेदस्य प्रामा-ण्यं किन्तु स्वतः, यथा देवदत्तकृतत्वेपि दीपस्य प्रकाशनशक्तिमत एव कृतत्वान्न देवदत्तापेक्षं तस्य प्रकाश-कत्वं तद्वदिति भावः।

(५) ननु नीरूपस्याधिष्ठेयत्वानुपपत्तिर्मीमांसायामपि समानेत्यत आह यथादर्शनमिति।

## करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

"रूपादिहीनमि"ति । अनुद्भूतरूपमित्यर्थः । रूपादिहीनकरणाधिष्ठानं हि पुरुषस्य स्वभोगादावेव दृष्टं नान्यत्र, नहि बाह्यं कुठाराद्यपरिदृष्टं व्यापारयन् कश्चिदुपलभ्यते, तस्मा-द्रूपादिहीनं करणं व्यापारायत ईश्वरस्य भोगादिप्रसक्तिस्तथा चानीश्वरत्वमिति भावः । कल्पान्तरमाह—"अन्यथे"ति । पूर्वमधिष्ठितिरधिष्ठानमिदानीं तु अधिष्ठानं भोगायतनं शरीरमुक्तम् । तथा भोगादिप्रसङ्गेनानीश्वरत्वं पूर्वमापादितम् . संप्रति तु शरीरित्वेन भोगादिप्रसङ्गादनीश्वरत्वमुक्तमिति विशेषः ॥ ४० ॥

## अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

अपि च सर्वत्रानुमानं प्रमाणयतः (१)प्रधानपुरुषेश्वराणामपि संख्याभेदवत्त्वमन्तवत्त्वं च द्रव्यत्वात् । (२)संख्यान्यत्वे सति प्रमेयत्वाद्वानुमातव्यं ततश्चान्तवत्त्वमसर्वज्ञता वा । (३)अ-स्माकं त्वागमगम्येऽर्थे तद्बाधितविषयतया नानुमानं प्रभवतीति भावः । स्वरूपपरिमाणमपि यस्य यादृशमणुमहत्परममहद्दीर्घं ह्रस्वं चेति । 'अथ मा भूदेष दोष' इत्युत्तरो विकल्पो यस्यान्तो-ऽस्ति तस्यान्तवत्त्वाग्रहणमसर्वज्ञतामापादयेत् । यस्य त्वन्त एव नास्ति तस्य तदग्रहणं नासर्व-ज्ञतामावहति नहि शशविषाणाद्यज्ञानादज्ञो भवतीति भावः । परिहरति—"तत" इति । (४)आगमानपेक्षस्यानुमानमेषामन्तवत्त्वमवगमयतीत्युक्तम् ॥ ४१ ॥

## उत्पत्त्यसंभवात् ॥ ४२ ॥

अन्यत्र(५) वेदाविसंवादाद्यत्रांशे(६) विसंवादः स निरस्यते, तमंशमाह "यत्पुनरि-दमुच्यते" । "वासुदेवात्संकर्षणो जीव" इति जीवस्य कारणवत्त्वे सत्यनित्यत्व-मनित्यत्वे परलोकिनो ऽभावात्परलोकाभावः, ततश्च स्वर्गनरकापवर्गाभावापत्तेर्नास्तिक्यमित्य-र्थः । अनुपपन्ना च जीवस्योत्पत्तिरित्याह "प्रतिषेधिष्यते चे"ति ॥ ४२ ॥

## न च कर्तुः करणम् ॥ ४३ ॥

यद्यप्यनेकशिल्पपर्यवदातः परशुं कृत्वा तेन पलाशं छिनत्ति, यद्यपि च (७)प्रयत्नेनेन्द्रि-यार्थात्ममनःसंनिकर्षलक्षणं ज्ञानकरणमुपादायात्मार्थं विजानाति, तथापि संकर्षणो ऽकरणः कथं

---

(१) प्रधानेति । अत्र पुरुषत्वजात्यभिप्रायेण पुरुषाणामैक्याभित्वं द्रष्टव्यम् , संख्याविशेषवत्त्वे द्रव्य-त्वमन्तवत्त्वे च संख्याविशेषवत्त्वं हेतुर्द्रष्टव्यः ।

(२) एवं द्रव्याश्रितैव संख्येति मतेन संख्याविशेषवत्त्वे द्रव्यत्वं हेतूकृत्वा संख्यां विहाय सर्वत्र संख्या-ङ्गीकारपक्षेऽनुमानप्रकारमाह संख्यान्यत्वे सतीति ।

(३) ननु ब्रह्माप्यन्तवदेकत्वादेकघटवदित्यनुमानं कुतो न स्यादत आह अस्माकं त्विति ।

(४) वादिन इति शेषः ।

(५) नारायण एव परः सर्वात्माऽनेकधा व्यूह्यावस्थित इत्यत्रांशे ।

(६) वासुदेवात्संकर्षण उत्पद्यते इत्यत्रांशे ।

(७) भवतु क्रियाकरणमुत्पाद्यं ज्ञानकरणं तु नैवं स्यादत आह प्रयत्नेनेति । विवक्षातश्चात्र प्रयत्ना-दीनां करणत्वं बोध्यम् ।

प्रद्युम्नाख्यं मनःकरणं कुर्यात् । अकरणस्य वा करणनिर्माणसामर्थ्ये कृतं करणनिर्माणेनाकरणादेव निखिलकार्यसिद्धेरिति भावः ॥ ४३ ॥

**विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥**

वासुदेवा एवैते संकर्षणादयो "निर्दोषा" अविद्यादिदोषरहिताः । "निरधिष्ठानाः" निरुपादाना अत एव "निरवद्या" अनित्यत्वादिदोषरहिताः तस्मादुत्पत्त्यसंभवोनुगुणत्वान्न दोष इत्यर्थः। अत्रोच्यते "एवमपी"ति । मा भूदभ्युपगमे न दोषः, प्रकारान्तरेण त्वयमेव दोषः । प्रश्नपूर्वं प्रकारान्तरमाह "कथं यदि तावदि"ति । न तावदेते परस्परं भिन्ना ईश्वराः परस्परव्याहतेच्छा भवितुमर्हन्ति व्याहतकामत्वे च कार्यानुत्पादात् (१) अव्याहतकामत्वे वा प्रत्येकमीश्वरत्वे एकेनैवेशनायाः कृतत्वादानर्थक्यमितरेषाम् । संभूय चेशनायां परिशुद्धो(२) न कश्चिदीश्वरः स्यात्, सिद्धान्तहानिश्च, (३)भगवानेवैको वासुदेवः परमार्थतत्त्वमित्यभ्युपगमात् । तस्मात्कल्पान्तरमास्थेयम् । तत्र चोत्पत्त्यसम्भवो दोष इत्याशयवान् कल्पान्तरमुपन्यस्योत्पत्त्यसंभवेनापाकरोति "अथायमभिप्राय" इति । सुगममन्यत् ॥४४

**विप्रतिषेधाच्च ॥ ४५ ॥**

गुणिभ्यः खल्वात्मभ्यो ज्ञानादीन् गुणान् भेदेनोक्त्वा पुनरभेदं ब्रूते "आत्मान एवैते भगवन्तो वासुदेवा" इति । आदिग्रहणेन प्रद्युम्नानिरुद्धयोर्मनोहंकारलक्षणतयात्मनो भेदमभिधायात्मान एवैत इति तद्विरुद्धाभेदाभिधानमपरं संगृहीतम् । वेदविप्रतिषेधो व्याख्यातः ॥ ४५ ॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभगवत्पादभाष्यविभागे भामत्यां
द्वितीयाध्यायस्य द्वितीयः पादः ॥



(१) तथा चेश्वरत्वव्याघात इति भावः ।

(२) निश्चितः ।

(३) अनेकेश्वरत्वेऽपसिद्धान्तमाह भगवानिति ।

